काञ्चनाञ्चला केलि-चञ्चला
तरङ्ग-भङ्ग रङ्गिणी ।
तुरङ्ग-गमना तुरङ्ग-शमना
प्रभञ्जन-चिरसङ्गिनी ॥३१॥
मणि-मञ्जीरा मधुसञ्चारा
"मनोमानुष"-धारिणी ।
नयन-रञ्जना नत-निरञ्जना
"प्राणबन्धु"-विहारिणी ॥३२॥

अहो ! रमणीया इयं रक्त शाटिका । नूनमियं कस्याश्चन स्नानार्थिन्यास्तरुण्या स्यात् । किन्तु कुत्र सा ? (इतस्ततः परिलोक्य) अत्रोपविष्टा काचन ललना । अप्यस्या इयं भवेत् ? भवतु इमामेव पृच्छामि । (समीपमुपसृत्य) भद्रे ! न मम दोषं गणयतु भवती । किमियं शाटिका भवत्या ?

**कमलकलिका** । (चकिता) बाढम्, ममैव इयं शाटिका । भवन्तं सहस्रकोटिशो धन्यवादान् विज्ञापयामि । भद्र ! को भवान् ? क्व वा भवान् इमां प्राप्तवान् ?

**रूपकुमार** । अहमेको दीनातिदीनस्तरणीचालकः "रूपकुमार" नामधारी । इयं "मायाविनी"-नदी मम परमादरभाजनम् सतत-विचरणस्थानम् । अदूरे विराजते मम प्राणप्रतिमा तरणी "मयूखमालिका"-नामधारिणी । कियत् कालात् पूर्वं "मयूखमालिकया" उच्छल-नदीवक्षसि सानन्दं भासमानोऽहं तीरादापतन्तीं कोकनद-कमनीयकान्तिम् अरुणकिरणस्नाताम् शाटिकाम् इमाम् अकस्मादपश्यम् । ततोऽहं नदीजले निपत्य तामानीतवान् । गृह्णातु भवती । (ददाति)

**कमलकलिका** । भद्र ! भृशं दुःखितास्मि यन्मदर्थं भवतः एतादृशः क्लेशो जातः । क्षमतां मां भवान् कृपया ।

**रूपकुमार** । (सस्मितम्) क्षमायाः का कथा ? मादृशानां जलचारिणां पक्षे तुच्छातितुच्छोऽयं व्यापारः—क्लेशस्यापि का कथा ?

भद्रे। विदाय याचे। कल्याण भवत्या भूयात्। (प्रस्थानोद्यत)

**कमलकलिका।** (स्वगतम्) अहो! कथ चित्त मे वपते मलयपवन-सञ्चालित-वेणुवनमिव? क एष?

भवतु, साहसमेवावलम्बनीयम्—अदृष्ट-लेखन यथा तथा वा भवतु। (प्रकाशम्) आर्य! कृपया पुनर्गीयतां भवतस्तरणी-गीति, हृदयरञ्जिका रमणीया रोमाञ्चकरा चैषा।

**रूपकुमारः।** (सानन्दम्) कृतकृतार्थोऽस्मि। किन्तु भद्रे! अधुना मम समयो नास्ति। मद्विरहात् मम प्राणप्रिय-तरणी "मयूखमालिका" अधैर्या जाता। पश्यतु, पश्यतु, भवती—उच्छल-तरङ्गकम्पिता उत्थान-पतनशीला सा मामाह्वयति शिर सञ्चालनेन, शृणोतु शृणोतु भवती तस्या आकुलाह्वानम्—

"सखे सखे! आगच्छ, आगच्छ, मा विलम्ब कुरु निमेष-मात्रम्। राजाधिराज-सागरराजो मामाह्वयति सस्नेहम्। तत सखे! मुहूर्तमात्रमपि समयक्षेप अवाञ्छनीय।" इति।

तत क्षमतां मां भवती। अह यामि। (पुन प्रस्थानोद्यत)

**कमलकलिका।** (सावेगम्) किं भवत• पुनर्दर्शन मया न प्राप्तव्यम्?

**रूपकुमार•।** (आश्चर्यान्वित) कथ मम पुनर्दर्शन भवत्या याच्यते? दीनदरिद्र जनोऽहम्।

भवतु, परश्व पूर्णिमा-रजनी—मम "मयूखमालिकाया" शुभजन्मोत्सव-दिवस! सा भवतीं सादरम् आमन्त्रयति। कृपया आगच्छतु भवती मध्यरात्रे अत्रैव स्थाने। अहम् अधुना गच्छामि। असहनीय एव विलम्ब।

(प्रस्थित)

**कमलकलिका।** (रोदनोन्मुखी) न जाने किं सघटितम्। कथम् उन्मत्तेव धावामि अहम् अपरिचित-जनस्य पश्चात्? तथापि चुम्बको यथा लौहम् आकर्षति, सागरो यथा स्रोतस्विनीम् आह्वयति, सूर्यो यथा सरोजिनीम्

*आकुलयति, चन्द्रो यथा चकारम् उद्वेलयति तथा सोऽपि माम्, सोऽपि माम्,* सोऽपि माम् ! किं करोमि, किं करोमि, किं करोमि ! ( वेगेन प्रस्थिता )।

( इति द्वितीय-दृश्यम् )

---

# पल्लीकमलम्

## तृतीय-दृश्यम्

[ कमलकलिकाया विवाहसम्बन्ध ]

स्थानम्—ब्रह्मपदस्य गृहम् ।

समय —प्रभातम् ।

( प्रविशति गायन् पल्लीगायक )

पल्लीगायक । ( प्राणबन्धु-गीतिः )

"प्राणबन्धो" रे रिक्तान्तरे
एहि मम प्राणप्रदीप !
"मनोमनुप" रे चित्त-कन्दरे
एहि मम मानसाधिप ॥३३॥
पथिप्रदर्शिका प्राणदीपिका
झञ्झा-मारुत-मथिता ।
तापहारिणी जीवन-तटिनी
मरु-वालुका-शोपिता ॥३४॥
झङ्कृति-हीना मानस-वीणा
निरन्तर-करुण-रुदिता ।
नित्य-नन्दिनी चित्त-पद्मिनी
विरहोत्ताप-मुद्रिता ॥३५॥

कर्ष कम-कृपां　　जीवन-रूपां
प्राणबन्धो ! सदय रे।
वर्ष शुभ-सुधां　　हर्षय वसुधां
मधुमय "मनोमनुप" रे ॥३६॥

( गायन् निष्क्रान्तः )

( ततः प्रविशन्ति ब्रह्मपदः तरङ्गिणी कमलकलिका च )

**कमलकलिका।** ( रोदनोन्मुखी ) पूजनीय पितृदेव ! कृपया शृणोतु भवान् मद्वचनम्। अधुना विवाहो मह्यं न रोचते बिन्दुमात्रम्। ततो विवाहसम्बन्धो न करणीयः।

**ब्रह्मपदः।** ( चिन्ताकुलः ) जीवन-दुर्गति-दुहितर्मम ! अत्याश्चर्यमिदं सर्वम् ! भारतीय-ललनापक्षे विवाहोऽवश्य-करणीयः इति विश्वब्रह्माण्ड-विदिता वार्ता। ततस्त्वं विश्वब्रह्माण्डवहिर्भूता विधातुरभिनवा सृष्टिरिति नाहं पूर्वं ज्ञातवान्। किं न जानासि त्वम् ?

अर्धाङ्गिनी भवति पत्युरियं हि पत्नी
सम्पूर्णतां न खलु विन्दति सा विना तम्।
सा पत्युरस्ति सततं सहधर्मिणीति
हित्वा पतिं कथमियं चरतु स्वधर्मम्।
पत्न्या द्वितीयमिव जीवनमेव भर्ता
सेयं ततः पतिमृते गतजीवनेव ॥३७॥
दीधित्येव दिनेशस्य गत्येव मातरिश्वनः।
छाययेव हि कायस्य स्त्रिया पुंसो न भिन्नता ॥३८॥

**कमलकलिका।** सत्यमेतत् पितः, सत्यमेतत्। अहं निश्चितमेव विश्वब्रह्माण्डवहिर्भूता अभिनवा सृष्टिः। तथापि भवत्पादपद्मच्छायाश्रिता।

**तरङ्गिणी।** ( सरोषम् ) अरे रे दाम्भिके ! अरे रे स्वार्थसर्वस्वे ! यदि स्वहितं विहाय अकारणं गुरुजनान् अवहेलयसि, तदा तव ललाटे असीम-कष्टं लिखितं वर्तते सुनिश्चितम् एव।

**कमलकलिका।** मात! ममादृष्ट ममैव, न यूय तद्विषये किञ्चिदपि अभियोज्या।

**तरङ्गिणी।** (सरोषम्) अरे रे कर्कशभाषिणि! अरे रे पाण्डित्याभिमानिनि! न प्रकटय तव विद्या-गौरव मम निकटे।

**कमलकलिका।** क्षमस्व, मात! क्षमस्व माम्, कृपया शान्ता भव।

**ब्रह्मपद•।** वत्से! शृणु मम वचन सावधानम्। परम-सौभाग्यशीला वय यत्, पात्रपक्ष स्वय साग्रहम् इम विवाहसम्बन्ध कृतवान्। अति-साधारण-जनोऽहम्, दीनहीन पल्लीवासी केवलम्। न मम सन्ति धन-जन-माना, न चास्ति विद्यागौरव कुलमाहात्म्य वा। *तथापि तवातुल-सौन्दर्य-*मुग्धो वर स्वय पणेन विना विवाहमिम स्थिरीकृतवान्।

**कमलकलिका।** (आश्चर्यान्विता) किन्तु अह न जानामि क्षुणाक्षरेण एतद्विषयम, कथमिद सघटितम्?

**तरङ्गिणी।** (सोपहासम्) सरला अबला अखला अमला मम बाला! शृणु रे मम राजकन्यक! यद्यपि इद सर्व तव अहङ्कारवर्धक भविष्यति, तथापि निरुपायाह कथयामि सव वृत्तान्तम्। शृणु सावधानम्।

वर श्रीलश्रीयुक्त-मार्तण्ड-महोदय प्रबल पराक्रान्त• परम-प्रभाववान् महावित्तशाली भूम्यधिकारी राजा। *कलिकाता-नगर्या तस्य असख्या* सुविशाला अट्टालिका सन्ति। तथापि स कृपया जन्मभूमि पल्लीजननीं न विस्मृतवान्। अत्रापि तेन निर्मिता एका सुविशाला अट्टालिका। तत्रैव स निवसति अधुना श्रीश्रीदुर्गापूजावकाशे।

**कमलकलिका।** एतत् सर्वम् अज्ञात मम।

**ब्रह्मपदः।** सुष्ठु तत्। इदानी वाक्यशेष शृणु। स एकदा स्नानार्थिनी त्वाम् अन्तरालतः दृष्ट्वा मुग्ध सन् मम निकटे घटक प्रेरितवान्।

**तरङ्गिणी।** (सोपहासम) अह पुनर्न जाने किमत्र विद्यते दग्धदेहे मुग्धताया कारणम्। फु फु! अहो रुचेर्वैचित्र्यम्।

अङ्गारसङ्गं कथमेति हीरकः
पङ्कं पयोजाय कथं नु रोचते।
रत्नं कथं रज्यति सागरोदरे
वल्ली सदा श्लिष्यति किं वनस्पतिम्।
अहो रुचिर्नाम विचारविच्युत·
कोऽप्येष भावो विकरोति मानसम् ॥३९॥

**ब्रह्मपद**। मम पक्षे इदम् आशातीतं सौभाग्यमेव सुनिश्चितम्। वङ्गीय-प्रवादानुसारेण वक्तुमर्हामि—"आकाश-चन्द्र· पतित करे मे"।

**तरङ्गिणी**। सत्य पूर्णकलम्। तव प्राणप्रतिमा इय कन्यका अति-साधारण-पल्लीवासिनी, शिक्षादीक्षा-विहीना, अभिजाताचार-व्यवहाराभ्यास-शून्या च। किं बाह्य-सौन्दर्यमेव सर्वम्? एव सति कथं नयनाभिराम पलाश-पुष्प गन्धहीनत्वेन सर्वेषां निन्दाभाजनम्? कथ वा वर्णसुषमामण्डि-तोऽपि मयूर कण्ठ-कार्कश्येन सर्वेषामनादरहेतु? तत शृणु रे सौन्दर्यगर्विते! चपले! अवाध्ये बालिके? एतादृशं महासौभाग्य नावहेलन-योग्यम्।

**कमलकलिका**। (रोदनपरा) मात। नाह गर्विता, चपला अवाध्या वा। अह क्षुद्रातिक्षुद्रा पल्लीबाला। पल्लीजननी मम प्राणाधिका सर्वदा। किं मम प्रयोजन नगरस्थ-हर्म्येण विपुल-वैभवेन, अभिजात-सम्बन्धेन वा? निम्नतमा सर्वपदपिष्टा धूलिकणा न स्पर्धते उच्चतमस्य सर्व-शिर स्वरूपस्य हिमाचलस्य शृङ्गं आरोढुम्, क्षुद्रतमा क्षीणतमा क्षणकाल-स्थायिनी शिशिर-कणिका न आशास्ते महत्तमस्य मार्तण्डस्य प्रखर-प्रभाम् आत्मनि प्रतिफलयितुम्। तुच्छतमा उद्गीत-दीना खद्योत-माला न क्षमते स्निग्धतमस्य तमस्विनी-नायस्य कोमल-कौमुदीम् अनुकर्तुम्—कदापि न, कदापि न, कदापि न।

**तरङ्गिणी**। अरे रे परम-प्रगल्भ! अरे रे वाक्यविलासिनि! तव सुमधुर वाक्यजालं न मां बन्धुं शक्नुयात् कदाचन। फु फु!

**ब्रह्मपद**। वत्से! मम एकोऽनुरोधस्त्वया अवश्यमेव पालनीय। अन्यथाह सत्यभङ्ग-दोषदुष्टो भविष्यामि सुनिश्चितम्।

**कमलकलिका।** परम-श्रद्धेय पितृदेव। आज्ञापयतु भवान्। भवत आदेशो मया अवश्यमेव पालनीय ।

**ब्रह्मपद।** *आगामिनि दिवसे महामहिममय- श्रीलश्रीयुक्त-मार्तण्ड-*महोदय कृपया आगमिष्यति अत्रैव पित्रा सह तव सन्दर्शनाय त्वया सहालपनाय च। सदमेव स्थिरीकृतम्। अत एव जीवनसम-कन्यके। एव कुर्या येन नाहम् असत्य भाषी भवेयम्।

**तरङ्गिणी।** कृपया तत् कुरु महिममयि।

**कमलकलिका।** अशेष-गौरव-विमण्डित पितृदेव। विशेषसौभाग्य-सुशोभिते मातृदेवि। भवतो सम्मान-रक्षण मम क्षुद्रजीवनस्य बृहद् व्रतम्। तत आगामिनि दिवसे अह निश्चितमेव मान्यानाम् अतिथीना समक्ष गमिष्यामि। किन्तु अधुना विवाह असम्भव एव मत्पक्षे—उद्वाहबन्धन ममोद्बन्धन-रज्जुसम सुनिश्चितमेव। (क्रन्दनपरा प्रस्थिता)

**ब्रह्मपदः।** (चिन्ताकुल) न जाने किं सघटितम् अत्र। अनिच्छुका कन्या कदापि न विवाहयोग्या इति शास्त्रमतम्। अथ च ईदृशो विवाह-सम्बन्धा न घटिष्यते पुनर्वार जीवने।

> **पात्रान्वेषण-सादरेऽसति गुरौ काले विवाहोचिते**
> **औत्सुक्यं दधते स्वयं युवतयः प्रेमास्पदासादने।**
> **तत्रैषा भृशमर्थिताऽप्युपयमे यज्जायते नोत्सुका**
> **तेनेयं तरुणान्तर-प्रणयिनी जातेति मे संशय ॥४०॥**

**तरङ्गिणी।** मा चिन्ताकुलो भव। वातुला विना का वा एतादृश-परम-सौभाग्य परिहरति स्वेच्छया? "कुक्षौ क्षुधा मुखे लज्जा"—इत्येव *वङ्गीय-प्रवादवाक्यम्।* इदमत्रापि सत्यम्। *अत एव मा चिन्ताकुलो भव* नाथ, मा भैषी।

**(इति तृतीय-दृश्यम्)**

# पल्लीकमलम्

## चतुर्थ-दृश्यम्

[ कन्यासन्दर्शनम ]

स्थानम्—ब्रह्मपदस्य गृहम् ।

समयः—प्रभातम् ।

( ततः प्रविशन्ति ब्रह्मपदः, तरङ्गिणी काञ्चनकणिका ग्रामबन्धुश्च )

**ब्रह्मपद** । असीमा खलु भगवतः कृपा । तस्यैव करुणया सर्वमिद सघटितम् । अन्यथा मादृशस्य दीनदरिद्रस्य स्वप्नातीतमेव आसीत् ईदृश विवाह-सम्बन्ध-सघटनम् ।

अह पुनरत्रापि चिन्तयामि—कथ धनिनो मानिनश्च ते मादृशेन दीनातिदीनेन सह विवाहसम्बन्ध कर्तु समुत्सुका जाताः । अथवा महात्मना रीतिरेवैषा ।

नास्त्युच्च-नीच-धनिनिर्धन-मूर्खविद्वद्-
भेदो यथा भगवतः करुणाप्रकाशे ।
एवं हि वस्तुनिचया नितरां महान्तः
सर्वत्र भान्ति भुवने समपक्षपाताः ॥८१॥

**तरङ्गिणी** । सत्य, सत्यं, पूर्ण-सत्यम् ।

**ब्रह्मपद** । पश्य—

भूपालोपवने विशाल-सरसो जातं जनैरादृत
नित्यं स्फोटयति प्रसन्नमनसा सूर्यः सरोजं यथा ।
सर्वानादृत-नामगोत्ररहितं मार्गैकपार्श्वस्थितं
क्षीणाङ्गं तृणपुष्पकञ्च स तथा प्रस्फोटयत्यादरात् ॥८२॥

उच्चैस्तरं तरुवर सुदृढ सशाखं
यद्वत् प्रनर्तयति मारुत आदरेण ।

निःसार-भङ्गुरमतुन्नतमल्पकायं
तुच्छातितुच्छ-तृणगुच्छमसौ तथैव ॥४३॥

**तरङ्गिणी।** नाथ, अपूर्वा खलु भवतः कवित्वशक्तिः।

**बृहत्पद।** न हि, न हि, देवि। नेयं कवित्वशक्तिः, इयं हि उदार-प्रकृत्या मोहनरीतिः। भूयोऽपि पश्य—

मेघो यथा मिष्टफल-द्रुमाणां
बीजं करोत्यङ्कुरितं सुवृष्ट्या।
स्वादेन गन्धेन नितान्तहीनं
तथैव बीजं वनज-द्रुमाणाम् ॥४४॥
ग्रामान् धनजनैः पूर्णान् यथा सिञ्चति निम्नगा।
तथैव निर्धन-जनान् खेट-खर्वट पल्लिकान् ॥४५॥
गन्धेन तर्प्यते पुष्पैः राजकन्येव मालिनी।
विहगैर्मोह्यते गीत्या भूपाल इव कर्षकः ॥४६॥

**तरङ्गिणी।** किन्तु आर्य! मा श्रीभगवन्तम् अकारणं प्रागेव प्रशंस। न जानासि किल यत्, तव नयन-तारका दुहिता कमलकलिका कठिनाति-कठिना अविनीता अविनेया छलकला-विशारदा च सातिशयम्? मन्ये, तस्याः प्रस्तरवत् कठिनाः प्राणाः, तुषारवत् हिमं हृदयं कङ्करवत् कर्कशं चित्तञ्च न गलिष्यन्ति कदाचन कस्यचिदपि अनुरोधेन।

**बृहत्पद।** नहि, नहि। मा उद्विग्ना भव। अतीव सुशीला निःस्वार्था माता-पितृगत-प्राणा सा। ततो मन्ये, सा अवश्यमेव अस्माकं मनोवाञ्छां पूरयिष्यति।

**तरङ्गिणी।** अहन्तु मन्ये, अस्माकं राजकन्यायाः मतिर्गतिश्च न आशाजनिके।

**काञ्चनकणिका।** (सोपहासम्) पूजनीये मातृष्वसः। मा उद्विग्ना भवतु नाम भवती। राजमहोदयस्य रूपदर्शनेन सा मुग्धा भविष्यति निमेषेण। (सर्वे हसन्ति)

**ग्रामबन्धु ।** मा मुग्धा भवतु मा वा, इय क्षुद्रातिक्षुद्रा "मधुमालती" पल्ली तु अवश्यमेव अशेष-गौरवान्विता भवेत्, यदि तस्या कन्यका काचित् ईदृश-सम्मानित-धनिजनस्य गृहिणीपदम् अलङ्कुर्यात् परम सौभाग्यवशात्।

**ब्रह्मपद•।** सत्य सत्यम्। (अग्रतो विलोक्य) अहो! इत आयाति राजाधिराज श्रीलश्रीयुक्त-मार्तण्डमहोदय (सर्वे निरुद्ध-निश्वासमिव पश्यन्ति)।

(तत प्रविशन्ति मार्तण्ड, तस्य पिता प्रभञ्जन, भ्राता चण्ड पारिषदवर्गश्च)

**ब्रह्मपद•।** सुस्वागत सुस्वागतम्। मम दीनातिदीन कुटीरमद्य धन्यातिधन्य जात भवादृशाना महापुरुषाणा श्रीपादस्पर्शनात्।

सर्वान् नमस्करोमि सश्रद्धम्। कृपया आसनानि परिगृह्णन्तु भवन्त।

**प्रभञ्जन।** (प्रतिनमस्कारम् अकृत्वा, सक्रोधम्) कुत्र वयम् उपविशाम? अस्मिन् भूमितले? न कदापि अस्माभिस्तत् कृतम्। न सन्ति तत्र उच्चासनानि?

**ब्रह्मपद।** (विषण्णवदन) आर्य! अह दीनहीन पल्लीजन। कथ वाह प्राप्स्यामि उच्चासनानि?

**चण्ड।** (सरोषम्) तत कथ त्वमस्मान् अत्र निमन्त्रितवान्? असीमा खलु तव स्पर्धा! न जानासि त्वम् अस्माक कुलगौरवम्? धिक् धिक्! न जानासि चास्माक परिचयम्?

**काञ्चनकणिका।** (सापहासम्) भद्र! न भवन्त अकारणमत्र अस्माभिरामन्त्रिता। अस्मद्विषये विदित-वार्त श्रीमार्तण्ड एव अत्रागन्तुम् ऐच्छदिति ज्ञात्वैव अस्माभिर्भवन्तोऽत्र सादर समाहूता। अन्यथा धनिजन-सन्दर्शनाय नास्माक मनसि बिन्दुमात्रापि कामना विद्यत।

**प्रभञ्जन।** केय प्रगल्भा असमसाहसा बाला? (स्वजनान् उद्दिश्य) वयस्या! प्रत्यावर्तिष्यामहे वय सद्य एव। दीनहीन-क्षीणजनानां हस्ते अस्माक ईदृशी लाञ्छना असहनीयैव। (गमनोद्यत)

**पारिषद•।** (सदर्पम्) सत्यम्! अस्माक विश्ववरेण्यो राजमहोन्य

असीम-कृपापरवशो भूत्वा युष्माकम् इद पर्णकुटीर पदरजसा धन्य कृतवान्। तथापि यूय न कृतज्ञा कृतकृतार्थाश्च ?

"पथिकुक्कुर आद्रियमाणो मस्तकमारोहति" इति सुष्ठु वङ्गीयप्रवाद-वचनम्। तदेवात्र सघटितम्।

**तरङ्गिणी।** (साश्रुनेत्रा) महामहिमान्वित महोदय। कृपया क्षमता मिमा बुद्धि-विहीना बालिकाम्। आसनानि परिगृह्णन्तु भवन्त सकृपम् अस्मिन् सद्याधौते भूमितले। इमानि आसनानि मम कन्ययैव निर्मितानि।

**मार्तण्ड।** (साग्रहम्) तव कन्यकयैव निर्मितानि ? अहो! सुन्दर-तमानि रूपाण्येतेषाम्।

पित! भ्रात! अन्ये च। आसनानि परिगृह्णन्तु सर्वे। वृथा कालक्षेपो न वाञ्छनीय। (सर्वे उपविशन्ति)

**प्रभञ्जन।** उ हु! उ हु! अतिकठिन कर्कश खल्विद भूमितलम्। मम सर्वाङ्ग व्यथते।

भवतु, पुन्नाम-नरकत्राता "पुत्र", किं वा तस्मै अदेय मम ? अत एवा-विलम्बम् ईदृशी दु खजनक-घटना परिसमापनीया।

झटिति आनय कन्यकाम्—मा वृथा कालक्षेप कुरु, क्षणमात्रोऽपि विलम्बो न सहनीय।

(तरङ्गिणी गमनोद्यता)

**चण्ड।** शृणु रे! वरवर्णिनि! तव कन्यका कृत्रिम-प्रलेपादिभि रञ्जिता मा कुरु। नगर-निवासिनो वय सर्वे चतुरधुरन्धरा। ततो युष्माक चातुरीं वय निमेषादेव आविष्करिष्याम। अत एव भृश सावधाना भव, भृश सावधाना भव।

**काञ्चनकणिका।** (उच्चैर्हसन्ती) हा हा हा। मम प्राणप्रिया सखी न भवन्त इव कृष्णकाया, ततस्तस्या कृत्रिम-प्रलेपादिभिर्न किञ्चिदपि प्रयोजनमस्ति। हा हा हा।

चण्डः। असहनीया खल्वियम् अवमानना! स्थानमिदं त्यक्ष्यामि मुहूर्तेन। (गमनोद्यतः)

पारिषदः। तथा करोतु भवान्, तथा करोतु। मान्य-जनानामीदृश्यवमानना कदापि न सहनीया, कदापि न।

ग्रामबन्धुः। विरमतु, विरमतु भवान् कृपया। मूढा ग्राम्यबालिकेयम्, क्षमतां भवान् तां सानुग्रहम्।

मार्तण्डः। भ्रातः! उपविश, उपविश। कृपया आनयतु भवती तव कन्यकाम् अत्र।

(तरङ्गिणी काञ्चनकणिका च प्रस्थिते)

(सर्वे तूष्णीं तिष्ठन्ति सुगम्भीराः)

(ततः प्रविशन्ति तरङ्गिणी, काञ्चनकणिका कमलकलिका च)

ब्रह्मपदः। (सावेगम्) इयं मम प्राणप्रतिमा कन्यका अशेष-सुलक्षणशालिनी "कमलकलिका" नाम। वत्से! प्रणम सर्वान्।

(कमलकलिका तथा करोति। तस्या अतुल-रूपराशिं दृष्ट्वा सर्वे चकिता वाग्रहिताश्च तिष्ठन्ति)

प्रभञ्जनः। (सावेगम्) "क-म-ल-क-लि-का"! मधुरतमं कोमलतमं योग्यतमञ्च नामेदम्। वत्से! उपविश मत्समीपे।

(कमलकलिका तथा करोति)

प्रभञ्जनः। अहो! स्वयं श्रीश्रीजगद्धात्री एवाकस्मात् अत्राविर्भूता! सौम्ये! न मम किञ्चिदपि प्रष्टव्यमस्ति। कल्याणं ते भूयात्।

चण्डः। (सरोषम्) पितः! ईदृश आवेगोच्छ्वासो न त्वयि शोभते। भवतु, अहमेव इमां पृच्छामि।

ब्रह्मपदः। (साग्रहम्) पृच्छतु भवान्, स्वच्छन्दं पृच्छतु।

चण्डः। का तव शिक्षा-दीक्षा? अपि त्वं वि-ए, एम्-ए-उपाधिधारिणी?

**काञ्चनकणिका।** अपि भवान् तथा? प्रारम्भे तदुच्यताम्। हा हा हा।

**चण्ड.।** अपरिसीम-स्पर्धाशीलेयं ग्राम्यबाला! तत्र किं करोमि?

**मार्तण्ड.।** शान्तो भव, भ्रातर्धैर्यं धारय।

**चण्ड.।** (सदर्पम्) न वयं साधारण-जनवद् वृत्तिजीविन। ततोऽस्माकं बि-ए, एम्-ए-उपाधिभिर्न किञ्चिदपि प्रयोजनमस्ति।

**काञ्चनकणिका।** हा हा हा! किन्त्वीदृशोपाधिभिर्भृशं प्रयोजनमस्ति भवतां गृहवधूनाम्। अहो! चित्तचमत्कारिणीयं युक्तिप्रणाली! हा हा हा!

**तरङ्गिणी।** काञ्चनकणिके! तूष्णीम्भव। अतिथि-जनानाम् अवमानना कदापि न करणीया।

**काञ्चनकणिका।** (सोपहासम्) यदाज्ञापयति भवती। किन्तु, गृहकर्तॄणाम् अपि अवमानना कदापि न करणीया।

**प्रभञ्जन।** (सादरम्) स्नेहपुत्तलिके! तव मधुरातिमधुरं कण्ठस्वरं श्रोतुं भृशं वाञ्छामि। ततो गीयतां सङ्गीतमेकम्।

**ब्रह्मपद।** नयनमणे! कुरु एकां पल्लीगीतिम्।

**कमलकलिका।** (गायति)

(पल्ली-वन्दना)

विभुपद-वहनां दुष्कृत-दहनां
नमामि जननीं पल्लीम्।
घनवन-गहनां परमत-सहनां
विकशित-कुन्दक-मल्लीम् ॥४७॥
ज्योत्स्ना-वसनां तटिनी-रसनां
वलयित-वेल्लित-वल्लीम्।
पल्लव-लसनां प्रसून-हसनां
तरलित-तृणदल झल्लीम् ॥४८॥

कुञ्जक-कमनां　　गुञ्जन-रमणां
हर्षित-हितकर-झल्लीम् ।
दुर्मद-दमना　　मर्दित-शमनां
तर्पित-तनु-तनु-तल्लीम् ॥४९॥

**चण्ड.।** (सोपहासम्) अहो। किन्नरकण्ठी इय पल्लीललना। ऊर्वशीसमाना।

**मार्तण्ड।** भ्रात। मा वृथा प्रलप। शृण्वन्तु भवन्त। वृथा समयक्षेपा न करणीय। यथा तथा वा भवतु, इय कन्यका मम चित्तहारिणी, मम मनोनीता सर्वथा। तत पित। विवाहदिन स्थिरीकुरु सत्वरम्।

**प्रभञ्जन.।** (सोल्लासम्) अहो आनन्दस्य परा काष्ठा। विवाहविमुख पुत्रको मे स्वयमेव विवाहप्रस्ताव करोति। अहो सौभाग्यम्। लक्ष्मीस्वरूपा वधूर्मया लब्धा।

**चण्ड.।** (स्वगतम्) अहा। सर्वे जाता वायुरोगग्रस्ता। सत्यम्। मायाविनी एषा "मायाविनी" नदी।

**प्रभञ्जन।** (ब्रह्मपदमुद्दिश्य) भद्र। विवाहदिन स्थिरीकरोतु भवान् अचिरात्। विलम्ब सर्वेषामेव असहनीय।

**कमलकलिका।** (स्वगतम्) अहो। किमह करिष्यामि मन्दभाग्या? को मां रक्षिष्यति व्याघ्रकवलात्?

दावानल-व्याकुल-काननान्त-
र्या कोमलाया हरिणाङ्गनाया।
विषोल्वण-व्यालकुलाकुलेऽन्ते
विले च या दर्दुर-दारिकाया ॥५०॥
झञ्झा-मरुत्क्षुब्ध-नभस्यसीमे
या दुर्गज-श्रान्त विहङ्गिकाया।
उत्ताल-कल्लोलशतैरशान्ते
महामहोदन्वति या सफर्या ॥५१॥

ममापि तादृग् वत दृश्यते दशा
को रक्षको मे भविता दयाघन.।
सर्वेषु भूतेषु समानदर्शिनं
श्रीकृष्णमेकं तदहं समाश्रये ॥५२॥

**ब्रह्मपद.**। (स्वगतम्) किमहं करिष्याम्यधुना ? सत्यमेव "गगनस्थ-चन्द्रो मम हस्ते निपतित"। अथ च नाहं तं स्वीकर्तुं शक्नोमि। अहो मे दौर्भाग्यम् ?

निशापतिर्भ्रन्दयति मे करागतो
गतोऽपि गेहं निधिरेव नि सृत ।
पीयूष-पूरश्चुलुकीकृतो गलाद्
बलादिवास्ते गलितोऽद्य भूतले ॥५३॥

**तरङ्गिणी**। नाथ ! किं चिन्तयसि ? आगामिनि सप्ताहे विवाहयोग्यानि बहूनि शुभदिनानि सन्ति, तेषामेव एकतमं स्थिरीकुरु—"शुभस्य शीघ्रम्"।

**काञ्चनकणिका**। किन्तु विवेचनीयम् अस्ति किञ्चिदन्। न केवलं वरस्य, कन्याया अपि सम्मतिर्विवाहव्यापारे प्रयोजनीया। अत एव मम प्रियसख्या सम्मतिरपि ग्रहणीया।

**तरङ्गिणी**। (सरोषम्) अत्याश्चर्यम् इदं सर्वम्! कन्यानाम् अपि सम्मतिग्रहणं न दृष्टं श्रुतं वा कस्मिन्नपि काले।

**ग्रामबन्धुः**। अपिच, न केवलं तत्, स्वयं राजाधिराजोऽनागत अकस्मात् अस्माकं दीनहीनकुटीरे याचकरूपेण। ततस्तस्या असम्मते किं वा कारणं विद्यते ?

**तरङ्गिणी**। सत्यं, पूर्णसत्यम्!

**ब्रह्मपद.**। (सकरुणं कमलकलिकां विलोकयन् मार्तण्डमुद्दिश्य) तथापि अहं समयं याचे। मा रोषपरवशा भवन्तु भवन्तः कृपया।

**तरङ्गिणी**। (सकोपम्) नहि, नहि, शुभदिनं कुरु सुस्थिरम् अत्रैव सर्वजनसमक्षम्।

**वृद्धपद्मः** । न तत् सम्भवपरम् अस्ति । कन्यायाः सम्मतिं विना विवाहकार्यं न सम्पादनीयम् । अतीव लज्जाशीला सा कथं सर्वजनसमक्ष मनोभावं प्रकाशयितुं शक्ष्यति ?

( प्रभञ्जनमुद्दिश्य युक्तकरः ) आर्य ! असीमा खलु भवतः कृपा ! यतो भवान् विना पणेन मम प्राणाधिका कन्यका ग्रहीतुम् आग्रहशीलः । यथासम्भवं शीघ्रमहं भवते निवेदयिष्यामि सर्वम् । कृपया क्षमता मा भवान् ।

**प्रभञ्जनः** । मा पर्याकुलो भवतु भवान् । उद्वेगकारण ममैव, न भवतः । भवतु, भवितव्यं भविष्यति सर्वदा, भवितव्यं भविष्यति सर्वथा ।

**( समाप्तं चतुर्थ-दृश्यम् )**

---

## पल्लीकमलम्

### पञ्चम-दृश्यम्

[ प्राण-मिलनम् ]

स्थानम्—"मायाविनी" नदीतीरम् ।

समयः—पूर्णिमा-रजनी-मध्यभागः ।

प्रविशति गायन् पल्लीगायकः—

**( गीतम् )**

**( पल्ली-ललना-वन्दना )**

**चम्पकवदना पङ्कजनयना कुञ्जरगमना ललना ।**
**जलधर-केशा शशधर-वेशा त्रिभुवन-देशा रमणा ॥५४॥**
**कुत्र सा गता माधवी-लता कुसुमभर-नता कमना ।**
**गुञ्जन-हीनं मञ्जु-निकुञ्जं शान्त-शिञ्जनाद्चरणाः ॥५५॥**

नहि नहि नहि सा वास्तव-विवशा सा किल स्वप्न-शरणा ।
मायाभरणा छायावरणा वराङ्गना मृदुहसना ॥५६॥
मदन-मोहना स्वर्ग-शोभना मधु-मेघधनुर्ल्लसना ।
नहि नहि नहि सा ससार-वशा सा खलु स्वप्नललना ॥५७॥

( गायन्नेव प्रस्थित )

( तत प्रविशति कमलकलिका वेगेन )

**कमलकलिका ।** ( उच्छ्वसन्ती ) गभीर-निद्रामग्ना मातर विहाय अहमनागता धावनपरा एकाकिनी उन्मत्तावत् । किमेतत् शोभनम् ? किन्तु किं करोमि ? किं वा कर्तु शक्नामि ? शक्तिहीनैव जाताहम् अकस्मात् परपदनता दयित-निभरशीला प्रियैकप्राणा च सर्वथा । अहो ! मम स्वातन्त्र्यमपि विनष्टम् । मम समग्र-सत्ता प्रियतम सत्ताया विलीना सञ्जाता परिपूर्णम् । अहो ! अत्याश्चर्या, अभिनवा, अनिर्वचनीया चेयमनुभूति ।

किन्तु, मधुरातिमधुर नामेदम् आत्मसमर्पणम्—न वन्दते लवमात्रमपि स्वार्थपरताम्, नापेक्षते बिन्दुमात्रमपि प्रतिदानम्, न कामयते कणमात्रमपि पार्थिवलाभम्, न सहते अणुमात्रमपि क्षुद्रताम् ।

अहो ! ग्रीष्ममध्याह्ने प्रदीप्त-प्रसन्न प्रफुल्ल-दिनमणिर्य् विनिर्बाध लसति स्वेच्छया नि स्वार्थभावेन । किं सा वन्दते स्वार्थपरता लवमात्रमपि ?

अहो ! वर्षा-निशीथे शीतल-विमल-जलभारावनता जलदमाला निश्शेषम् अमृत वर्षति स्वेच्छया नि स्वार्थभावेन । किं सापेक्षते प्रतिदान बिन्दुमात्र-मपि ?

अहो ! शारद-प्रभात हिरण्यारुण-किरणरञ्जिता अरविन्द-कलिका निरङ्कुश प्रस्फुटति स्वेच्छया नि स्वार्थभावेन । कि सा कामयते पार्थिवलाभ कणमात्रमपि ?

अहो ! वासन्त-प्रत्यूषे ललित-लीलायित-भ्रमरललना निरतिशय गुञ्जति स्वेच्छया नि स्वायभावेन । किं सा सहते क्षुद्रताम अणुमात्रमपि ?

निशि निशि समुदित—नियुत-युवतियुत-
शशधर-दोलन-दोला।
द्रुतगतिसङ्कुल—सूरकरोज्ज्वल-
तरङ्ग-चञ्चल-माला ॥६२॥
स्वयमुपनीते तरङ्ग-गीते
स्वयमुपकल्पित-ताला।
अभिमत-नागर—मभिसरति नु वर-
मविरत रङ्ग-रसाला।
दुर्गतजनगति—विश्व-विशाम्पति
नटवर-नव-नटशाला ॥६३॥

**रूपकुमार.।** (विलोक्य स्वगतम्) अहो ! इयम् आगता मायापुरी-प्रमोदिनी, मोहिनी सा मायाबाला—आश्चर्यरूपधरा, मनसिज मनोन्मथिनी सरसिज-रसक्षरिणी।

अहो ! रजतोज्ज्वला, रसप्रोच्छला चन्द्रिकापि मलिनेव भाति अस्या मनारम-सुखविभया। केयम् ? किं सा धरणीरञ्जनी रमणीयतमा रमा ?

(उपसृत्य) भद्रे ! भवतीमभिवन्दे। आर्ये ! सत्यमेव भणामि न खल्वासीत् आशा मम यत् पुनरपि भवतीं प्रक्षिष्ये इति। तत कृतकृतार्थोऽहम्।

देवि ! कृपया उपविशतु भवती मम "मयूखमालिको"परि। जीर्णा शीर्णा दीना सा, किन्तु मम प्राणप्रिया तरणी—मम नित्यसहचरी, मम चित्त-मधुकरी, मम वित्तवृद्धिकरी।

**कमलकलिका।** भद्र ! किं भवान् न नेष्यति मां "मायाविनी" नदीविहारार्थं भवत प्राणप्रतिमया "मयूखमालिकया" ?

**रूपकुमार.।** (सानन्दम्) सत्य यास्यति भवती मया सह तरणी-विहारार्थम् ? आशातीत सौभाग्य मम।

कमलकलिका। सत्य यास्यामि। अन्यथा कथमहम् अनागता गभीरे निशीथे एकाकिनी सगोपनम्? ततो मा करोतु विलम्ब भवान्।

रूपकुमारः। किमत्र प्रार्थनया? आगच्छतु भवती मया सह सानुग्रहम्।

[ पटपरिवर्तनम् ]

( "मायाविनी"-नदीवक्षसि भासमाना "मयूरमालिका"। तत्रोपविष्टौ परस्पराभिमुखौ कमलकलिका-रूपकुमारौ )

कमलकलिका। ( संगीतम् )

श्रीकृष्ण-वन्दना

राधावल्लभ! दुष्कृति-दुर्लभ-मिच्छति तव पदपल्लवमेषा।
मति-गतिहीना तव पदलीना पातक-पीना कृशतनुरेषा ॥६४॥
न खलु धन-जनः स्पृशति मम मनः सुरसयति न पुनः सम्पदशेषा।
करोमि शरणं शरण्यकरण वरेण्य-चरणं विशीर्णवेषा ॥६५॥
गोवर्धनधर! ननु मामुद्धर तनुजित-जलधर! कातरघोषा।
प्रणयि-पुरन्दर! कुसुमशर-सुन्दर! वक्ति निरन्तरमिदमपदोषा ॥६६॥

रूपकुमारः। ( सावेगम् ) अपूर्वमिदं संगीतम्। भवती पल्लीवासिनी नगरनिवासिनी वा?

कमलकलिका। ( विहस्य ) अहम् आजन्म पल्लीवासिनी। कामये यद् आमरणमपि तथैव तिष्ठेयम्।

रूपकुमारः। ( पूर्ववत् भावाकुल ) तथापि मन्ये, न प्राग् भवत्या ईदृश दृश्य दृष्टम्।

कमलकलिका। सत्यम्, यथाह भवान्।

रूपकुमारः। ( उदास-दृष्टिः ) नद्येव मम जननी, आकाश एव मम जनकः, तरण्येव मम सखी, अन्येन केनचित् किं वा मम प्रयोजनम्?

भद्रे। पश्यतु, पश्यतु भवती नयने पूरयित्वा, जीवन-यौवने नन्दयित्वा

ज्योत्स्ना-विधौताया जनन्या "मायाविनी" नद्या मायाविनी मनोमोहिनीं द्युतिम्।

**कमलकलिका।** पश्यामि भद्र! सत्यं जीवनं मे सार्थकं जातम्।

**रूपकुमार।** (भावाविष्ट)

**रजत-रञ्जित-रुचिराञ्चलधरा**
**रत्न-रणित-वलय-वन्दित करा।**
**मञ्जुल-मणिमय-मञ्जीर परा**
**जननी नियतोत्सव-वेश-वरा॥६७॥**

तत् कथम्? यतोऽद्य रात्रौ निशानाथ सप्तविंशति जायाभि सह शुभ परिणय-वार्षिकोत्सवरत। तत एव गगने लसन्ति मङ्गलदीपा, पवने नदन्ति कल्याण-शङ्खा, भुवने पतन्ति ललित-लाजा। अहो! रोमाञ्चकरम् इद सर्वम्।

**कमलकलिका।** सत्यम्, मोहाविष्टेव जाता अहमपि।

**रूपकुमार।** (*सहसा विलोक्य*) *मायाञ्जन-रञ्जित-खञ्जन-गञ्जन-*सन्ताप-भञ्जन-नयना सुन्दरीश्रेष्ठा भवती अस्य सुन्दरतम महोत्सवस्य योग्यतमा दर्शिका।

**कमलकलिका।** (*सलज्जम्*) नहि, नहि। *किन्तु वदतु को भवान्?* न भवान् साधारण-नौचालक इव परिलक्ष्यते। वाग्भङ्गी भवत श्रेष्ठ-कविजनोचितेति सुनिश्चितम्।

**रूपकुमार।** नहि, नहि। अह साधारण-नौचालक एव, नान्य कश्चित्। *अथवा, साधारण-नौचालकेभ्योऽपि दीनतरो हीनतर क्षीणतरश्च।* यतो विशाले विश्व ब्रह्माण्डे मम कोऽपि नास्ति, कोऽपि न।

**कमलकलिका।** (*साश्रुनेत्रा*) *सत्यम्? अहो दौर्भाग्यम्।*

**रूपकुमार।** एकस्या शारद-पूर्णिमारात्रौ अस्मिन्नेव नदीवक्षसि अस्यामेव नौकाया भासमान आस सप्तवर्षीयोऽहम् एकाकी—इत्येव मम जीवनस्य प्रथमा अस्पष्टा स्मृति। तत एवाहम् एकाकी एतन्नौका-साहाय-

केन येन तेन प्रकारेण जीवनं धारयामि। अत एवेयं शारदपूर्णिमा मम प्राणप्रिय-नौकायाः शुभ-जन्मतिथिः। मम अस्याश्च नामनी अहम् एव दत्तवान्।

**कमलकलिका।** शोभनतमे नामनी। किन्तु भद्र! किं भवान् सुखी? आनन्द-दीप्त एव भवान् दृश्यते। आश्चर्यम्!

**रूपकुमारः।** सुखितमः, सौम्ये सुखितमः।

**कमलकलिका।** तत् कथम्? आश्चर्यम्! सुखोपकरणं भवतः किमपि न दृश्यते।

**रूपकुमारः।** भद्रे! सुखम् आनन्दो वा नोपकरणम् अपेक्षते। आनन्दो ह्यात्माश्रयी। अतः

> सुखमुपकरणस्थं शक्यते नैव वक्तुं
> यदुपकरण-पुष्टास्तुष्टिमायान्ति नैके।
> अथ च सतत-हीना वस्तुनाऽल्पीयसापि
> वयमिव सुखमन्ये मन्वते नित्यतृप्ताः ॥६८॥

**कमलकलिका।** (सौत्सुक्यम्) एवं तर्हि किं भवत एतादृशानन्दस्य कारणम्?

**रूपकुमारः।** शृणोतु भवती, शृणोतु तत्। प्रत्यूषादारभ्य गभीर-निशीथ-पर्यन्तम् अहं प्रत्यहं "मायाविनी" नद्यां "मयूखमालिका" तरणी-योगेन भ्रमामि मम "मनोमानुषम्" अन्वेष्टुं, मम "प्राणबन्धुना" सह मिलितुं मम "मनोमानुष" "प्राणबन्धु" वा हृदय-कन्दरे बन्दीकर्तुम्।

**कमलकलिका।** "मनोमानुषः"? "प्राणबन्धुः"? कः सः?

**रूपकुमारः।** सः? स हि मम सर्वस्वम्। न स बहिर्जनः। स हि ममान्तर-देवता—ममात्मा मम मनो मम प्राणा मम देहो मम जीवनम्। तस्यैव रूपं पश्यन्ति युगे युगे ऋषयः, तस्यैव दर्शनमिच्छन्ति युगे युगे साधकाः, तस्यैव महिमानं गायन्ति युगे युगे कवयः।

**कमलकलिका।** (सावेगम्) सत्यम्? सत्यमेतत्?

**रूपकुमारः।** ( अशृण्वन् ) तस्यैव सौन्दर्य सर्वत्र विकसितम्, तस्यैवैश्वर्य सर्वत्र विलसितम्। आनन्दस्वरूपः सः। य एकवारमपि एककणमपि तदमृतम् आस्वादितवान् तस्य जीवने क्लेश-लवोऽपि नास्ति। अहम् एतादृश-सौभाग्यवान् कश्चित्।

**कमलकलिका।** ( सावेगम् ) भद्र! कृपया मामपि करोतु भवान् तदानन्द-भागिनीम्। अकूल-ससार-सागरे अहमपि गमिष्यामि "प्राणबन्धु" "मनोमानुष" वा अन्वेष्टुं भवतः सङ्गिनीरूपेण भवतस्तरणीयोगेन भासमाना अहरहः।

**रूपकुमारः।** ( प्रकृतिमापद्य ) सौम्ये! मैवं भणतु। ज्योत्स्नाजाल मायाजाल विस्तार्य सर्वत्र विद्यमानम्। भवत्यपि माया-मुग्धा जाता साम्प्रतम्। तदेव भणति। न कल्याण-जनकम् ईदृशालपन भवत्पक्षे मत्पक्षे वा। ततः प्रत्यावर्तनम् एव वरम्।

**कमलकलिका।** ( रोदनपरा ) न, न, नाह प्रत्यावर्तिष्ये। अहं गमिष्यामि भवता सह "प्राणबन्धु" "मनोमानुष" वा द्रष्टुम्।

**रूपकुमारः।** विरमतु भवती, विरमतु। अमङ्गल-जनक सर्वमेतत्। आवां सत्वर प्रत्यावर्तिष्यावहे।

**कमलकलिका।** ( विषण्णा ) यथा भवते रोचते तथा करोतु भवान्।

**रूपकुमारः।** अदूरे तीरं पश्यामि। मा मम दोष गणयतु भवती। भवत्सकाशे अत्रागमनाय ममानुरोध एवान्याय्य आसीत्। ततः क्षमता मा कृपया भवती।

**कमलकलिका।** को वा भवतो दोषः? यदत्र किञ्चिदप्यवाञ्छित सघटित तत्राहमेव दोषभागिणी, न भवान्।

**रूपकुमारः।** मैव चिन्तयतु भवती। मन्ये नाह पुनर्भवत्या दर्शनं लप्स्ये। ततश्चिराय विदायं प्रार्थये। एका तु मम प्रार्थना—कथयतु भवती कृपया भवत्याः सुगृहीत नाम।

**कमलकलिका।** "कमलकलिका"।

**रूपकुमार**। कमलकलिका। अहो योग्यतम नामैतत्। कल्याण भवत्या भूयात्। मनोमानुष प्राणवन्धुर्वा रक्षतु भवतीं कृपया सर्वदा।

[ पटपरिवर्तनम् ]

"मायाविनी"-नदीतीरम्

**कमलकलिका**। हा। हतास्मि मन्दभाग्या। गतो मम मनामानुष प्राणवन्धुर्वा चिराय। तत किं करिष्यामि? भवतु, गृहप्रत्यावर्तनमेव वरम्, गभीरा सञ्जाता रात्रि।

( अकस्मात् प्रविशति क्रोधकम्पितो मार्तण्ड )

**मार्तण्ड.**। (सरोषम्) हा हा हा। इदमेव तव विवाहे अनिच्छाया कारणम्? सर्व बुद्धम्। रे रे पापिष्ठे। रे रे दुश्चरित्रे? रे रे छलकला-विशारदे! कीदृशास्तव व्यवहार.? मम वाग्दत्ता भूत्वाऽपि परपुरुषेण सह यथेच्छ विचरितु त्व न लज्जसे? धिक त्वां, धिक् त्वा, सहस्रकोटिशो धिक।

**कमलकलिका**। भद्र। ईदृश परुष-वाक्य भवति न शोभते। भवान् देशस्य राजा। राजा स्यात् सर्वदा वैषम्यहीन न्यायपरायणश्च शास्त्रानुसारेण।

**मार्तण्ड**। अरे रे पण्डित-धुरन्धरे। मा मा तत्त्वकथा श्रावय। मम कर्तव्यमह जाने परिपूर्णतया, मा त्वम उद्विग्ना भव सत्वरम्। किन्तु स्वदोष-क्षालनाय किं वक्तु मिच्छसि?

**कमलकलिका**। (विहस्य) न किञ्चिदपि। प्रथमत, मन्मते अत्र दोष एव नास्ति। द्वितीयत, सत्यपि दोषे तदर्थ को वा भवान् मां तिरस्कर्तुम् अस्य कारण प्रष्टु वा? नाह भवते वाग्दत्ता कदापि, ईश्वर-कृपया कदापि न।

**मार्तण्ड.**। (हुहुङ्कारे) तुच्छातितुच्छाया पल्लीबालाया ईदृशी स्पर्धा? असहनीयम् एतत्। भवतु, अहमपि जाने प्रतिहिंसा ग्रहणपद्धतिम्। य काल-सर्पस्य विवरे हस्त प्रवेशयति अनवधान सोऽपि कालसर्पदष्टो भवत्यचिरेण—स्वेच्छया प्रवेशयत पुन का कथा?

**कमलकलिका**। मा अकारण मयि कुप्यतु भवान, नाह दोषिणी कथञ्चित्।

मार्तण्डः। न दोषिणी। गभीर-निशीथे परपुरुषेण सह नौकाविहारोऽपि न दोषाय।

कमलकलिका। (कठिना) अयं मम स्वगतो व्यापारः—न भवतः। भवतः, वृथा वाग्व्यय कालक्षेपश्च न वाञ्छितौ। तदहं गृहं यामि।

मार्तण्डः। (उच्चैः) पुनरपि कथयामि—मा विस्मर। कालसर्प-पुच्छ-मर्दन-कारिणि कालसर्पदष्टो भविष्यति सुनिश्चितम्। मा विस्मर सुन्दरि। मा विस्मर। (प्रस्थितः)

कमलकलिका। भवितव्यं भविष्यति, भवितव्यं भविष्यति सर्वदा, भवितव्यं भविष्यति सर्वथा।

(इति पञ्चम-दृश्यम्)

— o —

अत एव भ्रातर्मर्कट ! न त्वं मर्कट नाहमपि कर्कट —उभौ ब्रह्माणी एव। अत एवाहमुक्तवान्—न जानामि तव परिचयम् इति। यत को वा ब्रह्म जानाति। (उभौ उच्चैर्हसत)

**मर्कटः।** अत एव सर्वं सुष्ठु वर्तते। प्रिय-बन्धो ! माम् आलिङ्ग !

(उभौ आलिङ्गनबद्धौ)

**मर्कटः।** तत शृणु प्राणधन ! मम प्रकृत-परिचयम्। नाह ब्रह्म—हो ! हो ! हो ! अह प्रबल-पराक्रान्त कृपक-प्रवर श्रीलश्रीयुत हनुमच्चन्द्र-महोदय। आदरात् "मर्कट" इति सुष्ठु सुन्दर नाम स्वजनैर्दत्तम्।

**कर्कटः।** शृणु प्राणधन, शृणु ममापि प्रकृत-परिचयम्। अहमपि न ब्रह्म—हो ! हो ! हो ! अहमपि तुल्यप्रतापान्वितस्तन्तुवाय-प्रवर श्रील-श्रीयुक्त-मत्स्यचन्द्र-महोदय —आदरात् "कर्कट" इति सुष्ठु सुन्दर नाम स्वजनैर्दत्तम्।

उभौ। तत सर्वं सुष्ठु वर्तते। ब्रह्म विनश्यतु, जीवतां केवल कर्कट-मर्कटौ।

**मर्कट।** प्राणधन कर्कट। अस्माक परमादरणीय शरत्काल समागत साम्प्रतम्। तत, कथय भ्रात कञ्चन नवानन्द-सवादम्। अस्माक पल्लीजीवन वैचित्र्य-विहीन जातमधुना ईदृश-सवादाभावात्।

**कर्कट।** (सोल्लासम्) हृदय-शोणित कर्कट ! किम् अन्धो बधिरो वा त्वम्? अस्माक क्षुद्रातिक्षुद्रा "मधुमालती" पल्ली उत्तप्ता जाता साम्प्रतम् अत्याश्चर्येण, अभावनीयेन, अनिर्वचनीयेन घटनाचक्रेण। अपि न जानासि किल एतद्विषय घुणाक्षरेण?

**मर्कट.।** नहि, नहि, जीवनरस ! अह सरल असल अमल बालक केवलम्, परचर्चा-विषये मम मतिर्नास्ति कदाचन।

**कर्कट।** (सरोषम्) किं? किं कथयसि? अह परचर्चा-धुरन्धर इति ते वाक्यार्थ? ततोऽस्माकम् आजीवन-सख्य निमेषेण छिन्न जातम्। (कपटेन रोदिति)।

**मर्कट.।** मम प्राणप्रदीप ! मा रुदिहि ! तव एकाप्यश्रुकणा उत्ताल-प्रचण्ड सागर इव मा निमज्जयति निमेषेण। ततो विरम, जीवन-वल्लभ ! विरम। त्वमेवास्य ग्रामस्य नेतृस्थानीय सुनिश्चितमेव। अत. त्वमेव समग्र ग्रामस्य संवाद सग्राहक सवाद-परिवेशकश्च। तदेव केवल मयोक्तम्।

**कर्कटः।** अत एव सर्व सुष्ठु वर्तते। प्रिय-बन्धो ! माम् आलिङ्ग !

( उभौ आलिङ्गन वद्धौ )

**मर्कट ।** तत शृणु प्राणधन ! शृणु सावधान तमत्याश्चर्य सवादम्। अस्माक सुन्दरीश्रेष्ठा कमलकलिका तस्या कमल-कोमलाभ्या हस्ताभ्या प्रणयियुगलस्य कर्णयुगल-मर्दनं करोति सानन्दम्।

**कर्कट.।** किम ? किं कथयसि त्वम् ? प्रणयियुगलस्य ? भ्रात ! न विश्वसिमि न विश्वसिमि। अस्माक कन्यादाय ग्रस्त-ग्रामे एकोऽपि वरो न सुलभ, तत कथ सा अनायासेन बन्दीकृतवती पात्रद्वयम् ?

**कर्कट.।** सर्वमेतत् मायाविन्या मायैव। प्राणमकरन्द ! सरल-हृदयस्त्व कथ वा एतत् सर्व ज्ञास्यसि ?

( तत प्रविशन्ति मत्स्यजीविनी, पुष्पविक्रेत्री पण्यविक्रेत्री च वगेन )

**मर्कट ।** ( उच्चै ) अरे रे मत्स्यजीविनि ? कथ त्वम् ईदृश वेगेन धावसि ? का वा तव त्वरा ? क्षण तिष्ठान्नेव, आवाभ्या रोहित मत्स्याना कतिपयान् खण्डान् देहि प्रियतमे भगिनि।

**मत्स्यजीविनी।** *( सरोषम् )* रे रे दुर्वृत्त ? *भगिनी-सम्बोधनेन न* तव कथञ्चिदपि लाभो भविष्यति। नाह तादृशी निर्बोधा। ततो न माम् व्याकुलां कुरु। मम मरणस्यापि समयो नास्ति साम्प्रतम्।

**कर्कट ।** प्रि-य त-मे, भ-गि नि •!

**मत्स्यजीविनी।** शृणु रे कृकलास ! तव छलचातुर्यं मया सुष्ठुरूपेण ज्ञातम्। पुनरपि शृणु रे अभद्र ! न मां कदापि "अरे रे" इत्येव रूपेण आह्वय। ममापि अस्ति नाम, तन्नाम्नैव मा सम्बोधय अत पर सर्वदा।

**कर्कट ।** (साग्रहम्) प्रियतमे भगिनि । किं तव तन्मधुर-मोहन नाम ?

**मत्स्यजीविनी ।** (सगर्वम्) मम अत्याश्चर्यम् अतुलनीय नाम— "श्रील श्रीयुक्ता प्रावृट्प्रियङ्कर-प्रस्फुटित-प्रसून मालिका देवी ।"

**कर्कट ।** (चकित) हा हतोऽस्मि । प्रा-वृ-ट् - असम्भवम् । असम्भव तव नामोच्चारणम् ।

**मत्स्यजीविनी ।** (सदर्पम्) मम पिता कस्यचित् पण्डितश्रेष्ठस्य गृहे मत्स्यविक्रेता आसीत् । स ह्यादरान्मह्य दत्तवान् इद सुन्दरातिसुन्दर नाम ।
भवतु, वृथा कालक्षेपो न वाञ्छनीय । भगिन्य । प्राग्रेसरा भवत सर्वा वय सर्वा एकप्राणमनश्चित्तजीवना ।

**कर्कट ।** अरे रे पुष्पविक्रेत्रि ! त्वमपि जाता कठोरहृदया ? न दास्यसि मह्यम् एकमपि पुष्पमाल्य सादरम् ? अह तव दासानुदास ।

**पुष्पविक्रेत्री ।** (सरोषम्) नाह तव उपहासयोग्या । किंवा करिष्यसि त्व पुष्पमाल्येन ? किं भल्लुकस्य कर्कश-लोमश-कण्ठोपरि पुष्पमाल्य शोभते ? हा हा हा ।

**पण्यविक्रेत्री ।** हा हा हा । (मर्कटमुद्दिश्य) न वाञ्छसि त्व मम पण्य-द्रव्येषु किमपि ? गृहाण, कृपया गृहाणेदम् अङ्गरागभाण्डम् । तुषार-शुभ्र पद्मसुवासित कोमल-मसृण एषोऽङ्गरागो गर्दभस्य तमिस्रा-कृष्णे कराल-दंष्ट्रा-कुत्सिते पिशाच-प्रतिमे वदने अपूर्व सौन्दर्य विस्तारयिष्यति सुनिश्चित-मेव ।

मत्स्यजीविनी । हा हा हा ! किन्तु प्रियसख्यौ ! कौ वा एतौ भल्लूक-गर्दभौ अस्माकम् ? यदर्थं वय पल्ली ललना-श्रेष्ठा अपि वृथा समय-क्षेप करिष्याम ? ततो मा विलम्ब कुरुत मुहूर्तमात्रमपि ।

**सर्वा नार्य ।** हा हा हा ! (उच्चैर्हसन्ति) ।

**कर्कट ।** (पर्याकुल) भ्रातर्मर्कट ! किम् आवाभ्याम् अत्र करणीयम् ?

**मर्कट** । भ्रात कर्कट ! हिम-शीतला अवज्ञा एवाभ्याम् अवलम्बनीया। तत प्राणाधिक ! पूर्ववत् आलपनादिकमेव वरम्।

( उभौ परस्पर कर्णे कर्णे कथयत )

(सर्वा नार्य स्त्रीसुलभ-कौतूहलाक्रान्ता भूत्वा सर्वान् आधारान् भूमौ निक्षिपन्ति)

**मत्स्यजीविनी** । अरे ? किं कथयथो युवां कर्णाकर्णिकया ? किं सघटितम् ?

**मर्कट** । (सुगम्भीर ) तेन युष्माक किम् ? न स युष्माक व्यापार । सातिशयं गोपनीय सवमेतत्, राजाधिराज-विषयक कुत्सितो वृत्तान्त, अभिजात-वशस्य कलङ्क-गाथा वा। तत कृपया दूरम् अपसरत, युष्मत्समीपे अय गुह्यातिगुह्य कलङ्क-गर्हितो विषयो न कथन-योग्य ।

**पुष्पविक्रेत्री** । ( विस्फारित-नयना ) एग्र-एग्र-एग्र । राजाधिराज-विषयिका कलङ्क-मूलिका का घटना ? मां ब्रूहि सकृपम्, मां ब्रूहि। ममोदराद् गुह्यकथा कलङ्क-गाथा वा न कदापि निष्काशनीया केनापि, प्रतिजाने तत्।

**पण्यविक्रेत्री** । एव ममापि, भ्रात ! एवं ममापि। कृपया माम् अपि कथय त गोपन-वृत्तान्तम्। ( उभे कर्कट-मर्कटौ वेष्टयत ) ।

**मर्कट** । ( सुगम्भीर मस्तक सञ्चाल्य ) किन्तु यूयमधुना सातिशय-त्वराग्रस्ता । गोपन-वृत्तान्तोऽय सुदीर्घो रोमाञ्चकरश्च। श्रुतवान् अह सद्यो यद् युष्माक मरणस्यापि समयो नास्तीति ।

**पुष्पविक्रेत्री पण्यविक्रेत्री च** । ( समस्वरम् ) न, न, न—मरणस्य समयोऽस्माकमस्तु वा न वा, राजाधिराजस्य कलङ्कगाथाया गोपनसवाद-श्रवण-समय पुन पूर्णतयैवास्ति।

तत प्रसीदतु भवान्, आवयो प्रसीदतु। ( उभे मर्कट वेष्टयत )

**मत्स्यजीविनी** । ( सरोषम् ) दूरम् अपसरत निर्लज्जे ! दूरम् अपसरतम्। अह युष्माक दलश्रीं, मां त्यक्त्वा कथ युवां राजाधिराज-सम्बन्धिनो गोपन-सवादस्याधिकारिण्यौ भवेतम् ?

**पुष्पविक्रेत्री।** हुँ हुँ हुँ। दलकर्त्री। का त्वा दलकर्त्रीपदवी विभूषिताम् अकरोत्? कथय तत्, कथय महामहिममयि! स्वयं नियुक्ता दलकर्त्री एव त्वम्।

**पण्यविक्रेत्री।** अरे रे मत्स्यगन्धे। देह-सौरभ तव सहस्र-कोटि-योजनव्यापि। त्व यस्यां सभायां सभानेत्रीपदम् अलंकरिष्यसि तस्यां सभायाम् एकापि सभ्या न स्थास्यति। हा हा हा!—सर्वा एव पलायिष्यन्ते तव सुगन्ध माहात्म्येन। हा हा हा!

**पुष्पविक्रेत्री।** हा! हा! हा! भगिनि पण्यविक्रेत्रि! भृश सुरसिका त्वम्। हा! हा! हा!

**मत्स्यजीविनी।** (मत्स्य पटिकाया सम्मार्जनीं निष्काश्य) रे रे रे! अरे रे दुर्वृत्ते! अरे रे स्पर्धाशीले! अरे रे मृषाभाषिके! युवा न्याय्योपहाराणि गृह्णीत सानन्दम्। (पुष्पविक्रेत्रीं पण्यविक्रेत्रीञ्च प्रहरति)

**पुष्पविक्रेत्री।** (पुष्पभाण्डाच्छुरिका निष्काश्य) रे रे रे! अरे रे चामुण्डे! अरे रे करालवदने! अरे रे शूर्पणखारूपिणि! ममापि अस्त्यस्त्रम्। गृहाण कृपया, गृहाण परम-श्रद्धेये तव प्राप्यार्घ्यम्।

(मत्स्यजीविनीं छुरिकया आक्रामति)

**पण्यविक्रेत्री।** (पण्याधाराद् यष्टि निष्काश्य) रे रे रे! अरे रे कृमि कीटस्वरूपे! अरे रे कृकलास स्वभावे! अरे रे कृतान्तसदृशि! ममाप्यस्ति अस्त्रम्।

अशेष-पूज्यपादे! दलकर्त्रि-महोदये! गृहाण सानुग्रह गृहाण, मम भक्तिकुसुमाञ्जलिम्। (मत्स्यजीविनीं यष्ट्या प्रहरति)।

**मत्स्यजीविनी।** रे रे रे!

**पुष्पविक्रेत्री।** रे रे रे!

**पण्यविक्रेत्री।** रे रे रे!

(सर्वा प्रहाररता। महाकोलाहल)

**कर्कट**०। ( वेतसवत् कम्पित ) भ्रातर्भ्रात । किमेतत् ? मन्ये महाप्रलय उपस्थित । नास्ति कस्यचिन्निस्तार । भ्रातर्भ्रात. । कम्पते मम सर्वशरीरम्, विघूर्णति मम मस्तकम्, शुष्यति मम जिह्वा। किं करोमि प्राणाधिक ? किं करोमि ? चण्डमुण्ड-विनाशिनी प्रचण्डा चामुण्डेव धराधाम्नि आविर्भूता—नैका, परन्तु तिस्र । एकैव चामुण्डा विश्वब्रह्माण्डध्वंसकरी—तिसृणां चामुण्डानां पुन का कथा ?

**मर्कट**०। भ्रातर्भ्रात । प्राणप्रतिम भ्रात । ममापि दण्डायमाना केशा, ममापि शुष्क तालुकम्, ममापि घर्माक्तो देह ।

पश्य पश्य, जीवन-सहचर । एका सम्मार्जनी-शोभिनी, अन्या छुरिका-विलासिनी, इतरा च यष्टिप्रमोदिनी । किं करोमि, किं करोमि चित्तानन्द ? तत पलायनमेव वरम् ।

किन्तु प्रकम्पित पाद-युगल मम न विश्वास योग्यम्। तत किं करिष्यामि ? अहं निश्चितमेव अचिरेण मूर्छितो भविष्यामि। ( मूर्छां नाटयति ) ।

**कर्कट**:। एवं, एवं, एवं। त्वम् अचिरेण मूर्छितो भविष्यसि ? ( स्वगतम् ) "आत्मान सतत रक्षेत्" इत्याप्तवाक्यम्। ततो ममापि पलायनमेव वरम्। को वा नाम मूर्छित स्थूलदेह मर्कटम् अपसारयिष्यति ? तत पलायनमेव वरम् ( पलायित )

**मर्कट** । अहो। पलायितो मम तथाकथित प्राणप्रियो भ्राता आजीवनबन्धुर्मां त्यक्त्वा ध्याघ्रीमुखे ? ततोऽहमपि मूर्छां परित्यज्य पलायनमेव उपासे।

( पलायित )

( इति षष्ठ-दृश्यम् )

—०—

सप्तम-हृदयम्

[ काल-सर्पस्य दंशनम् ]

स्थानं—ब्रह्मपदस्य गृहम्।

समयः—मध्याह्नः।

( प्रविशति पल्लीगायकः )

( मनोमानुष-गीतिः )

दृष्टः किं "प्राणबन्धु"र्मम दृष्टो हि किं "मनोमानुषः" ?
गगने तस्य किरणोऽनुपमः समीरे स्पर्शो निष्कलुषः ॥६९॥
कुसुमे तस्य हास्यं मधुरं नदीजले स्नेहः सुविमलः।
विहगध्वनौ गीतं मदिरं हरित-वने रसः सुकोमलः ॥७०॥
विलसति भुवने प्रियतमो मम निरञ्जनो नित्य-निष्कलुषः।
दृष्टः किं "प्राणबन्धु"र्मम दृष्टो हि किं "मनोमानुषः ?" ॥७१॥

( प्रस्थितः )

( ततः प्रविशति चिन्ताकुलो ब्रह्मपदः )

ब्रह्मपदः। कमलकलिकाया मुखाच्छ्रुतवान् अहं मार्तण्डस्य वृत्तान्तम्। न जाने कालसर्पः कदा दंक्ष्यति अस्मान्। यथा तथा वा भवतु, असीमा खलु परमजनन्याः कृपा, या इमं विवाह-सम्बन्धं छित्वा मम प्राणप्रिय-कन्यकां काल-सर्पकवलाद् रक्षितवती सानुग्रहम्। आपाततो दुःखजनकमपि इदं परिणामे सुखावहमेव भविष्यति। कुतः ?

जगज्जनन्या न च किञ्चनास्ते
ह्यलौकिकं व्यर्थममङ्गलं वा।
चलन्ति तत्क्षेममयेच्छया सदा
जगन्ति कल्याणपथे चतुर्दश ॥७२॥

यज्जीवनानन्तरमेति मृत्यु-
र्दिनात् परं रात्रिरुपैति घोरा।
सुखेन साकं समुपैति दुःखं
पापञ्च पुण्येन समं समेति ॥७३॥
शुभाय लोकस्य चराचरस्य
प्रतीहि तस्यापि च सार्थकत्वम्।
तथाहि विश्राम-फला त्रियामा
ददाति लोके नवशक्तियोगम् ॥७४॥
स्वर्गापवर्गौ मरणं करोति
दुःखं तदज्ञानजयाय वाञ्छाम्।
प्रयान्ति पापान्यनुतापवह्नेः
सन्धुक्षणस्यादिम-कारणत्वम् ॥७५॥ [ विशेषकम् ]
( ततः प्रविशति विरस-वदना तरङ्गिणी )

**तरङ्गिणी।** नाथ ! विवाह-दिनं त्वया निर्धारितं न वा ? सातिशयम् उद्विग्नाहं तदर्थम्।

**ब्रह्मपदः।** *आर्ये ! परमा जनन्येव हर्त्री कर्त्री विधात्री, तस्या एवेच्छया सर्वं सम्भवति।*

**तरङ्गिणी।** ईदृशं व्यामोहकरं वाक्यं न मह्यं रोचते। मम प्रश्नस्य परिस्फुटम् उत्तरं देहि। ( द्वारे प्रबलः कराघातः )

**कमलकलिका।** ( वेगेन प्रविश्य ) पितः ! किं सघटितम् ? किं सघटितम् ?

( ततः प्रविशति राजप्रहरी )

**प्रहरी।** ( ब्रह्मपदमुद्दिश्य ) अहं त्वां वन्दीकर्तुमागतः।

**ब्रह्मपदः।** "वन्दीकर्तुम्।" तत् कथम् ?

**प्रहरी।** ( सदर्पम् ) त्वया राज्ञे अवश्य-देयः करो न दत्त इति।

**ब्रह्मपदः।** ( आश्चर्यान्वितः ) आश्चर्यम्। अहं प्रति[illegible] [illegible]मित-रूपेण करं दत्तवान् सर्वदा।

**प्रहरी।** ( पूर्ववत् सदर्पम् ) ततो दर्शय मे तत्र प्रमाणपत्रम्।

**वृद्धपदः।** मम प्रमाणपत्रं कीटमुक्तं विनष्टञ्च बहुपूर्वमेव। ततोऽहं प्रमाण-पत्रस्य प्रतिलिपि-लाभार्थं राजप्रतिनिधिसकाशे पत्रमेकं प्रेषितवान्। तस्य सकाशाद् भवान् सर्वं वृत्तान्तं ज्ञास्यति सुष्ठुरूपेण।

**प्रहरी।** ( विहस्य ) स वदति मिथ्या सर्वमिदम्, सम्पूर्णतो मिथ्या। करो न कदापि त्वया दत्तः।

**वृद्धपदः।** अत्याश्चर्यम् इदं सर्वम्। स जानाति स्पष्टतो यदिदं न मिथ्या, परन्तु अक्षरशः सत्यम्। ( स्वगतम् ) कालसर्प एव विजयी परिलक्ष्यते।

मां भेकशाव भृशमेव दष्टुं
फणां समुन्नाम्यति कालसर्पः।
तस्य प्रकोपोपशमे समर्थं
प्रेक्षे न कञ्चिद् विषवैद्यमद्य॥७६॥

किन्तु विश्वजनन्या विश्व-ब्रह्माण्डे कथं तत् सम्भवति? भवतु, वृथा वाग्व्ययो न करणीयः। दुर्वृत्त-जनानां समीपे करुणा-भिक्षापि निरर्थिका।

( प्रकाशम् ) भद्र! किमत्र करणीयम्?

**प्रहरी।** ( सदर्पम् ) अविलम्बं तव देयोऽर्थः परिशोध्यः। अन्यथा कारावरणमेव आस्ते लिखितं तव ललाटे।

**तरङ्गिणी।** हा हतास्मि मन्दभाग्या। ( रोदिति )

**कमलकलिका।** अहो! किं करोमि, किं करोमि? एकोऽप्यलङ्कारो मम नास्ति, येनाहं परम स्नेहमयं पितरं अकारणाद् अवमाननाद् रक्षितुं शक्नोमि।

अहो गौमाहीन कर्मेतत्! न मम किञ्चिदपि बहुमूल्य वस्तु वा अस्ति यद् विक्रीयाहं पितरं मुक्तीकर्तुं पारयामि।

( किञ्चित् स्मरन्तीव सोल्लासम् ) हन्त! लब्धमिव मया पारं विपत्-पारावारस्य! मम कौमारकाले पित्रा मे काचन पेटिका प्रदत्ता—"उपस्थिताय

यज्जीवनानन्तरमेति मृत्यु-
दिनात् परं रात्रिरुपैति घोरा।
सुखेन साकं समुपैति दुःखं
पापञ्च पुण्येन समं समेति ॥७३॥

शुभाय लोकस्य चराचरस्य
प्रतीहि तस्यापि च सार्थकत्वम्।
तथाहि विश्राम-फला त्रियामा
ददाति लोके नवशक्तियोगम् ॥७४॥

स्वर्गापवर्गौ मरणं करोति
दुःखं तदज्ञानजयाय वाञ्छाम्।
प्रयान्ति पापान्यनुतापवह्नेः
सन्धुक्षणस्यादिम-कारणत्वम् ॥७५॥ [ विशेषकम् ]

( ततः प्रविशति विरस-वदना तरङ्गिणी )

**तरङ्गिणी।** नाथ! विवाह-दिनं त्वया निर्धारितं न वा? सातिशयम् उद्विग्नाहं तदर्थम्।

**ब्रह्मपदः।** आर्ये! परमा जनन्येव हर्त्री कर्त्री विधात्री, तस्या एवेच्छया सर्वं सम्भवति।

**तरङ्गिणी।** ईदृशं व्यामोहकरं वाक्यं न मह्यं रोचते। मम प्रश्नस्य परिस्फुटम् उत्तरं देहि। ( द्वारे प्रबलः कराघातः )

**कमलकलिका।** ( वेगेन प्रविश्य ) पितः! किं संघटितम्? किं सघटितम्?

( ततः प्रविशति राजप्रहरी )

**प्रहरी।** ( ब्रह्मपदमुद्दिश्य ) अहं त्वा वन्दीकर्तुमागतः।

**ब्रह्मपदः।** "वन्दीकर्तुम्।" तत् कथम्?

**प्रहरी।** ( सदर्पम् ) त्वया राज्ञे अवश्य-देयः करो न दत्त इति।

**ब्रह्मपदः।** ( आश्चर्यान्वितः ) आश्चर्यम्। अहं प्रतिवर्षमेव नियमित-रूपेण करं दत्तवान् सर्वदा।

**प्रहरी।** ( पूर्ववत् सदर्पम् ) ततो दर्शय मे तव प्रमाणपत्रम्।

**ब्रह्मपदः।** मम प्रमाणपत्रं कीटभुक्तं विनष्टञ्च बहुपूर्वमेव। ततोऽहं प्रमाण-पत्रस्य प्रतिलिपि-लाभार्थं राजप्रतिनिधिसकाशे पत्रमेकं प्रेषितवान्। तस्य सकाशाद् भवान् सर्वं वृत्तान्तं ज्ञास्यति सुष्ठुरूपेण।

**प्रहरी।** ( विहस्य ) स वदति मिथ्या सर्वमिदम्, सम्पूर्णतो मिथ्या। करो न कदापि त्वया दत्तः।

**ब्रह्मपदः।** अत्याश्चर्यम् इदं सर्वम्। स जानाति स्पष्टतो यदिदं न मिथ्या, परन्तु अक्षरशः सत्यम्। ( स्वगतम् ) कालसर्प एव विजयी परिलक्ष्यते।

मां मेषशाव भृशमेष दष्टुं
फणां समुन्नाम्यति कालसर्पः।
तस्य प्रकोपोपशमे समर्थं
प्रेक्षे न कश्चिद् विषवैद्यमद्य ॥७६॥

किन्तु विश्वजनन्या विश्व-ब्रह्माण्डे कथं तत् सम्भवति? भवतु, वृथा वाक्व्ययो न करणीयः। दुर्वृत्त-जनानां समीपे करुणा-भिक्षापि निरर्थिका।

( प्रकाशम् ) भद्र! किमत्र करणीयम्?

**प्रहरी।** ( सदर्पम् ) अविलम्बं तव देयोऽर्थः परिशोध्यः। अन्यथा कारावरणमेव शास्ते लिखितं तव ललाटे।

**तरङ्गिणी।** हा हतास्मि मन्दभाग्या। ( रोदिति )

**कमलकलिका।** अहो! किं करोमि, किं करोमि? एकोऽप्यलङ्कारो मम नास्ति, येनाहं परमस्नेहमयं पितरं अकारणाद् अवमाननाद् रक्षितुं शक्नोमि।

अहो सीमाहीनं कष्टमेतत्! न मम किञ्चिदपि बहुमूल्यं वस्तु वा अस्ति यद् विनीयाहं पितरं सुखीकर्तुं पारयामि।

( किञ्चित् स्मरन्तीव सोल्लासम् ) हन्त! लब्धमिव मया पारं विपत्-परावारस्य! मम कौमारकाले पित्रा मे काचन पेटिका प्रदत्ता—"उपस्थितायां

निधन-विपदेव त्वयैषा उन्मोचनीया, नान्यदा" इत्युक्तम्। मन्ये तत्र किञ्चन काञ्चन-रजतादिकं सञ्चितं वर्तते। स्वतोऽधिका विपत् वा का स्यान्मम जीवने? तदिदानीं गृहं गत्वा तामुन्मोच्य पश्यामि (सचिन्ता प्रस्थिता)।

**वृक्षपदः**। सम्प्रति रिक्तहस्तोऽहम्। भद्र। ततः किं करणीयं मया?

**प्रहरी**। (सोपहासम्) अहो! तरुण शिशुविशेषस्त्वम्! न किञ्चिदपि जानासि? तदेहि मया सह राजद्वारम्।

**वृक्षपदः**। यद् भवान् आज्ञापयति।

(वेगेन प्रविशति कमलकलिका उन्द्धसन्ती)

**कमलकलिका**। पितः पितः! आगच्छतु भवान्, कृपया अन्तरालम् आगच्छतु।

**वृक्षपदः**। प्रहरिमहोदय! कृपया क्षणं तिष्ठतु भवान् गृहद्वारदेशे।

**प्रहरी**। विलम्बं मा कुरु (बहिर्गतः)।

**कमलकलिका**। (उत्तेजिता उत्फुल्ला च) परम-श्रद्धेय पितृदेव! अन्विष्यन्त्या मया चिर-परित्यक्ताया जीर्णपेटिकायास्तलदेशात् अकस्मादाविष्कृता इयं रत्नखचिता मालिका। मन्ये, ईदृश-बहुमूल्योपहारं परम-स्नेहमयः पितृदेव एव मह्यं शैशवे दत्तवान्। ततो गृहाण पितृदेव! गृहाण इमां बहुमूल्यां रत्नमालाम्—सर्वविघ्न-विनाशिनी भविष्यति सा सुनिश्चितमेव।

(दम्पती परस्परमवलोकयतः)

**वृक्षपदः**। प्राणप्रिये! रत्नमाला तवैव, नास्माकं बिन्दुमात्रोऽपि अधिकारोऽस्ति तत्र।

**कमलकलिका**। (आश्चर्यान्विता) किन्तु त्वयैव दत्तेयं रत्नमाला। अन्यथा कथं सा मया प्राप्ता?

**तरङ्गिणी**। (साश्रुनेत्रा) स्नेहघने प्राणपुत्तलिके! कल्याणं ते भूयात्। तव पितृदेवाय इमां रत्न-खचितां मालिकाम् अर्घ्यं देहि सुभगे!

**कमलकलिका**। (पुनरपि विस्मयान्विता) नाहं बुध्ये एतत् सर्वम्। रत्नमाला पितृदेवस्यैव स्नेह-सुषमा-स्निग्ध उपहारः। कुतस्तत्र दानस्य प्रश्नः!

भवतु, वृथा कालक्षेपो न करणीय । पित ! यथाकर्तव्य करोतु भवान्
सानन्दम्, अह यामि ( प्रस्थिता )।

**ब्रह्मपद.**। अहो ! किं करिष्यामि । किंकर्तव्य-विमूढ उन्मत्तवचाह
जात ।

**तरङ्गिणी**। एतदन्य को वा पन्था ! पुत्रिकाया कल्याणार्थम् एवेद
करणीयम्। किञ्च, पुत्रिकाया अपि पितु प्रत्युपकारार्थम् ईदृश दान
नाधिक भवता मन्तव्यम्। यत,

प्रस्फुटय पूर्ण किरणेन पद्मिनी
वर्णै. सुगन्धैर्मधुभि सुधोपमै.।
सन्तर्प्य सर्वा विदिशो दिशस्तथा
करोति सूर्यस्य ऋणस्य निष्क्रयम् ॥७७॥
उपलभ्य पयांसि वारिदा-
द्दटवी जीवति या निरन्तरम्।
तदृण परिनिष्क्रिणाति सा
विकिरन्ती घन नील-कान्तिताम् ॥७८॥
परिपीय तुषारमद्रित
परिपीना तटिनी प्रयाति या ।
प्रविधाय सशस्यमूर्वर
कुरुते सा तदृणस्य निष्क्रयम् ॥७९॥
तथा पितु पूर्ण इवोज्ज्वलस्य
पयोधरस्येव सदा प्रदातु ।
गिरेरिव स्नेह-परायणस्य
ऋण विशोध्य सुतयापि शश्वत् ॥८०॥

ब्रह्मपद । सत्यम्। ( उच्चै ) प्रहरिमहोदय । अनागच्छतु भवान्
गङ्गपम्।

( ततः प्रविशति निद्रालुः प्रहरी विजृम्भणशीलः )

**प्रहरी ।** कथम् ईदृशमुग्धकथनम् ? मम नवीना निद्रा अकस्माद्भग्ना । अहो ! मधुरातिमधुरः स्वप्नोऽपि अकस्माद् विलीनो जातः । कः स स्वप्नः ? नन्दनकानने पारिजात-वृक्षतले सुखासीनोऽहम् अप्सरोवृन्दैर्वन्दितः । अहो ! रोमाञ्चकरोऽयं स्वप्नः ।

( ब्रह्मपदमुद्दिश्य ) भवतु, किं वाञ्छसि त्वम् ! बहुविलम्बो जातोऽकारणम् ।

**ब्रह्मपदः ।** अहं भवता सह राजद्वारं गमिष्याम्यधुना ।

**प्रहरी ।** तथा कुरु, तथा कुरु त्वम् । गृहगत-प्राणोऽहं जातः साम्प्रतम् ।

( ब्रह्मपदेन सह निष्क्रान्तः )

॥ इति सप्तम-दृश्यम् ॥

## पल्लीकमलम्

### अष्टम-दृश्यम्

[ कमलकलिकाया जीवन-रहस्योद्घाटनम् ]

स्थानं—राजसभा ।

समयः—अपराह्णः ।

( ततः प्रविशन्ति सपुत्रः सपारिषदो राजा प्रभञ्जनः प्रहरी ब्रह्मपदश्च )

**मार्तण्डः ।** *अयमागतः स गगनस्पर्शि-स्पर्धाशीलो जनः । तदहमिमं निर्दयं विनाशयिष्यामि ।*

( उच्चैः ) अरे रे मिथ्यावादिन् ! त्वया देयः करो न दत्तः । तथापि त्वं कथम् अवदः यन्मया दत्त इति ?

**ब्रह्मपदः ।** राजन् ! अहं भवतः प्रजा, भवानपि मद्रक्षको नृपतिः । तथापि मां मिथ्यावादी इति भणितुं नास्ति भवदधिकारः ।

**मार्तण्डः ।** "अधिकारः" ! रे रे दीन-दरिद्र ! रे रे हीनचरित्र ! रे रे हीनजन्मन् जन ! महामहिममयो राजाधिराजो नाहं तव उपदेश-भाजनम् । किं विस्मृतवान् यत् सामन्तोऽहम्, मम इच्छात् कस्यापि निस्तारो नास्ति ।

